तच्च कामयितुं योग्यम्। तेन द्रव्येण विना यागानिष्पत्तेः। तस्मादस्मिन्वाक्ये फलानभिधाने तद्भोगाभावात्कर्तुर्यागे कर्तृत्वमेव न त्वधिकार इत्यधिकारलक्षणं नारब्धव्यमिति प्राप्ते ब्रूमः—यजेतेत्यत्र प्रत्ययस्य केवलमाख्यातरूपत्वमेवेति न च मन्तव्यं, किन्तु लिङ्प्रत्ययत्वेन विधिरूपत्वमप्यस्ति तत्राख्याततत्वाकारेण भावनामाचष्टे, विधित्वाकारेण पुरुषं प्रवर्तयति, पुरुषश्च स्वाभिमतफलमन्तरेण न प्रवर्तते इति तदपेक्षितं स्वर्गमेव भाव्यतया विधिरुपादत्ते। स्वर्गशब्दश्चोत्कृष्टे सुखे रूढः। द्रव्ये तु लाक्षणिकः। तस्मात्सुखस्य भाव्यत्वं विधिश्रुत्या सिद्धम्। धात्वर्थस्य तु भाव्यत्वमेकपदेन प्रतीयमानमपि प्रत्ययेन नावगम्यते, किन्तु प्रकृत्या। तथासति स्वर्गभाव्यत्वं भावनायां प्रत्यासन्नयेकेनैव विधिरूपेणाख्यातेनावगमात्कमियोगादपि स्वर्गस्यैव भाव्यत्वम्। तस्मात्फलभोगसम्भवेन कर्तुरधिकारोऽस्तीत्यधिकारलक्षणमारब्धव्यमिति।

**अर्थबोधिनी**—जो व्यक्ति अधिकारविशिष्ट होता है, वही कर्मानुष्ठान करने पर उस कर्म के फल का भोक्ता होता है ( **तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः** )। अभिप्राय यह है कि अधिकारी व्यक्ति ही कर्मफलभोक्ता होता है। अधिकारी पुरुष के विशेषण को ही अधिकार कहते हैं ( **अधिकारश्च स एव यद्विधिवाक्येषु पुरुषविशेषत्वेन श्रूयते** )। **यजेत स्वर्गकामः** स्थल में प्रासङ्गिक याग काम्य कर्म है, अतएव स्वर्गकामना अर्थात् फलकामना 'अधिकार' है। जिस पुरुष में फलकामना है, वह अधिकारी है। 'स्वर्गकामः' अधिकारी व्यक्ति है और 'स्वर्गकामना' अधिकार है, जो कि पुरुष का विशेषण है। इसी प्रकार नैमित्तिक कर्म में निमित्त का निश्चय अधिकार होता है। **यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं निर्वपेत्** इस नैमित्तिक कर्मसम्बन्धी अधिकारविधि में 'अग्न्याधान' एवं 'गृहदाह' अधिकार है और सन्ध्योपासन आदि नित्य कर्म में शुचिविहितकालजीवित्व अधिकार है।[1] जो पुरुष 'शुचि एवं विहितकालजीवी' होता है। वह सन्ध्योपासन आदि नित्य क्रियाओं के फल का भोक्ता होता है।

अधिकारविधि में व्यक्ति के जितने विशेषण हैं, वे सभी सम्मिलित रूप में अधिकारी पुरुष में होने चाहिये, एक भी विशेषण की कमी होने पर व्यक्ति कर्मजन्य फल का भोक्ता नहीं हो सकता। उदाहरण के लिये **राजा राजसूयेन स्वाराज्यकामो यजेत** यह एक विधि है। यहाँ पुरुष के दो विशेषण हैं—१. राजा ( क्षत्रिय[2] ) एवं २. स्वाराज्यकामः। अतएव राजसूय याग का अनुष्ठान करने वाले व्यक्ति को क्षत्रिय भी होना चाहिए और स्वाराज्यकाम

---

१. देखिए—विभागसङ्ख्या-५८।

२. यहाँ 'राजा' शब्द का अर्थ 'क्षत्रिय' है—**अत्र राजपदं क्षत्रियमात्रवाचकम् एवञ्च नेतरयोरत्र प्राप्तिः।** ( सारविवेचिनी )

**एवं अत्र हि राजशब्देन क्षत्रिय एवोच्यते न तु राजसम्बन्धमात्रेण तेन क्षत्रियस्यैव राजसूयेऽधिकारो न तु तदन्यस्य ब्राह्मणादेरित्यन्यत्र विस्तर इति भावः।** ( कौमुदी )

भी। केवल स्वाराज्यकाम व्यक्ति राजसूय कर्म के फल का भोक्ता नहीं हो सकता, उसे क्षत्रिय भी होना आवश्यक है।

**प्रसङ्ग**—जिन विधिवाक्यों में जहाँ कहीं ऐसे विशेषण अश्रुत होते हैं, जिनकी अपेक्षा होती है, वहाँ उनका आक्षेप हो जाता है।

### ६०. क्वचिच्चाधिकारस्य पुरुषविशेषणत्वेनाश्रुतत्वम्

**क्वचित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणम्। यथाध्ययनविधिसिद्धा विद्या। क्रतुविधीनामर्थज्ञानापेक्षणीयत्वेनाध्ययनविधिसिद्धार्थज्ञानवन्तं प्रत्येव प्रवृत्तेः। एवमग्निसाध्यकर्मसु आधानसिद्धाग्निमत्ता। अग्निसाध्यकर्मणामग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः। एवं सामर्थ्यमपि। 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' इति न्यायात् समर्थं प्रत्येव विधिप्रवृत्तेः। तदेवं निरूपितो विधिः।**

**अर्थ**—कहीं-कहीं पुरुष के विशेषण-रूप में न सुना गया पदार्थ भी पुरुष का विशेषण होता है, जैसे **स्वाध्यायोऽध्येतव्यः** इस विधि से प्राप्त विद्या भी पुरुष का विशेषण मानी जाती है, यद्यपि विधिवाक्यों में 'विद्या' साक्षात् पुरुष के विशेषणरूप में सुनी नहीं जाती। इसका कारण यह है कि याग-विधायक विधिवाक्यों की प्रवृत्ति केवल उन्हीं पुरुषों के प्रति हो सकती है, जिन्होंने अध्ययनविधि के अनुसार विद्या की प्राप्ति कर ली है। भला विधिवाक्यों का अर्थ न जानने वाला व्यक्ति यागानुष्ठान में प्रवृत्त ही कैसे हो सकता है? इसी प्रकार अग्निसापेक्ष क्रियाओं का अनुष्ठाता पुरुष वही हो सकता है, जिसने नियमपूर्वक अग्न्याधान कर लिया हो; क्योंकि अग्निसापेक्ष क्रियाओं से सम्बद्ध विधिवाक्यों की प्रवृत्ति उन्हीं पुरुषों के प्रति होती है, जो अग्नि का आधान कर चुके हों। अग्न्याधानरहित व्यक्ति तत्तत् अग्निसापेक्ष कर्मों के फल के अधिकारी नहीं हो सकते, भले ही वे व्यक्ति तत्तत् क्रियाओं का अनुष्ठान करें। इसी प्रकार तत्तत् क्रियाओं के सम्पादन का 'सामर्थ्य' ( क्षमता ) भी तत्तत् विधानस्थल में पुरुष का विशेषण समझा जाना चाहिये; क्योंकि **आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी** इस न्याय से यह विदित होता है कि आख्यात जब अर्थ का बोध कराते हैं तब ( पुरुषगत ) सामर्थ्य ( कर्मानुष्ठानक्षमता ) भी अर्थबोध में सहायक होता है। इस प्रकार यह सिद्ध होता है कि समर्थ पुरुष के प्रति विधियों की प्रवृत्ति होती है।

विधिवाक्येष्वश्रुतमपि किञ्चिदधिकारिविशेषणत्वेनान्यथानुपपत्त्या तत्समाश्रयणेन व्यवहारोपपत्तिरित्याशयेनाह—क्वचित्त्विति। तत्रोदाहरणमाह—यथेति। विद्येत्यत्र विधिवाक्येष्वश्रुतमप्यधिकारिविशेषणत्वेन तद्विशेषणमिति शेषः। तत्र हेतुमाह—क्रत्वित्यादिना। तत्रैवोदाहरणान्तरमाह—एवमिति। अग्निमत्तेत्यत्रापि पूर्ववदेव शेषो बोध्यः। तत्रापि हेतुमाह—अग्निसाध्येति। तद्विधीनामिति। अग्निसाध्यकर्मविधीनामित्यर्थः। अनेन च

निरुक्ताधिकारिविशेषणेन शूद्रस्य यागेऽनधिकारो ध्वनितः। तस्याध्ययनविधिसिद्धविद्याया अभावादाधानसिद्धाग्निमत्ताया अभावाच्च। किञ्च अध्ययने ह्युपनीतस्यैवाधिकारात् उपनयनेऽपि च 'अष्टवर्षं ब्राह्मणमुपनयीते'त्यादिना त्रैवर्णिकस्यैवाधिकारविधानात्। अग्न्याधानेऽपि 'वसन्ते ब्राह्मणोऽग्नीनादधीते'त्यादिना त्रैवर्णिकमात्रस्याधिकारविधानाच्च। यद्यपि 'वर्षासु रथकारोऽग्नीनादधीते'त्यनेन रथकारस्य सौधन्वनापरनामकस्याग्न्याधानं विहितं योगाद्रूढेर्बलीयस्त्वात् तथापि नास्योत्तरकर्मस्वधिकारः, तस्याध्ययनविधिसिद्धविद्याया अभावादित्यन्यत्र विस्तर इति भावः। ननु तत्र रथं करोतीति व्युत्पत्त्या त्रैवर्णिक एव रथकारो न तु शूद्रस्य तत्राप्यधिकार इति चेन्न। सङ्कीर्णजातिविशेषे रथकारशब्दस्य रूढत्वात्। तथा हि—वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः। शूद्रायां वैश्यादुत्पन्ना करणी। तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः। तथा च याज्ञवल्क्यः—'माहिष्येण करण्यां तु रथकारः प्रजायते' इति। तस्मान्न तादृशव्युत्पत्त्या त्रैवर्णिको रथकारशब्देन ग्रहीतुं शक्यत इति। किञ्च कुत्रचिद्यागेऽपि कस्यचिच्छूद्रस्याधिकारो भवति 'वास्तुमयं रौद्रं चरुं निर्वपे'दिति प्रकृत्य 'एतया निषादस्थपतिं याजये'दिति श्रवणात्। वास्तुशब्दः किञ्चित्प्रकृतिद्रव्यविशेषमाह। एतस्यामिष्टावधिकारी निषादस्थपतिशब्दवाच्यस्त्रैवर्णिक एव। कुतः? निषादानां स्थपतिरिति षष्ठीसमासस्य त्रैवर्णिके सम्भवात् तस्य ह्यधीतवेदत्वे विद्यासम्भवाच्चेति प्राप्ते ब्रूमः—निषादश्चासौ स्थपतिश्चेति कर्मधारयसमासस्य मुख्यत्वान्न षष्ठीसमासेन त्रैवर्णिको निषादस्थपतिशब्दार्थः। षष्ठीसमासे तु सङ्कीर्णजातिविशेषवाचिना निषादशब्देन तत्सम्बन्ध उपलक्ष्येत। न त्वयं कर्मधारये दोषोऽस्ति। तस्मात् तात्कालिकाचार्योपदेशादिना विद्यां सम्पाद्य धनिको निषादो रौद्रं यागं कुर्यादिति राद्धान्तः।

अध्ययनविधिसिद्धविद्यादिवत्पुरुषसामर्थ्यमपि विधिवाक्येष्वश्रुतमप्यधिकारिविशेषणमित्याह—एवमिति। सामर्थ्यमिति। आज्यावेक्षणादिकं लौकिकपुंसामर्थ्यमित्यर्थः। वैदिकसामर्थ्यस्याध्ययनविधिसिद्धविद्यादेः पूर्वमेवोक्तत्वादित्यर्थः। वृद्धोक्तन्यायं विनिगमकं समुदाहरन् तत्र हेतुमाह—आख्यातानामिति। अनेन च विशेषणेनान्धादेरनधिकारो ध्वनितः। इदमत्र विचार्यते—अन्धः पङ्गुर्बधिरो मूको गवाश्वादयश्च तिर्यञ्च इत्यादीनां चेतनत्वेन निरतिशयसुखरूपे स्वर्गे कामना सम्भवति। अथोच्येत केषुचिदङ्गेषु तेषां शक्तिर्नास्ति। तथा हि—अन्धो नाज्यमवेक्षितुं क्षमः, पङ्गुर्विष्णुक्रमेष्वशक्तः, बधिरो नाध्वर्युप्रोक्तं शृणोति। तथा च 'क्लृप्तीर्वाचयती'ति विहितस्यानुष्ठानं न सिद्ध्येत्। मूकोऽनुमन्त्रणादावसमर्थः। तिर्यञ्चो बहुष्वसमर्था इति—तन्न। यथाशक्त्यङ्गानामनुष्ठेयत्वात्। 'स्वर्गकामो यजेते'त्यनेन प्रधानवाक्येन सर्वाधिकारः प्रतीयते। स चाज्यावेक्षणाद्यङ्गवाक्यानुसारेण न सङ्कोचयितुं युक्तः, किन्तु प्रधानानुसारेणाङ्गानुष्ठानमेव सङ्कोचयितुं युक्तं, तस्मादन्धादेरप्यधिकार इति प्राप्ते ब्रूमः—यदाज्यावेक्षणादयः पुरुषार्थतया विधीयेरन् तदा

तल्लोपयितुर्न क्रतोर्वैकल्यम्, इह तु क्रत्वङ्गतया ते विहिता इति तल्लोपे क्रतुरेव न निष्पद्येत, तस्मादसमर्थस्य नास्त्यधिकार इति सिद्धम्। किञ्च ज्योतिष्टोमे श्रूयते— 'यद्युद्गाताऽपच्छिद्येतादक्षिणो यज्ञः संस्थाप्योऽथान्यश्चाहर्तव्यस्तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यात् यदि प्रतिहर्ताऽपच्छिद्येत सर्वस्वं दद्यादि'ति। अस्यायमर्थः—प्रातःसवने बहिष्पवमानेन स्तोष्यमाणा ऋत्विजः शालाया बहिः प्रसर्पन्ति तदानीमेकस्य पृष्ठतोऽन्य इत्येवं पिपीलिकावत्पङ्क्त्याकारेण गन्तव्यम्। तत्र पुरतो गन्तुः कच्छं गृहीत्वैव पृष्ठतोऽन्यो गच्छेत्। एवं सति यदि प्रमादादुद्गाता गृहीतं कच्छं मुञ्चेत्तदा दक्षिणामदत्त्वा प्रक्रान्तो यज्ञः समापनीयः। तं समाप्य पुनरपि स यज्ञः प्रयोक्तव्यः। तस्मिन्प्रयोगे पूर्वं यद्दित्सितं द्रव्यं तद्दद्यात्। यदा प्रतिहर्ता मुञ्चेत् तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यादिति। तत्र यद्युद्गातृप्रतिहर्तारौ युगपत्तन्मुञ्चेतां तदानीमुक्तं प्रायश्चित्तनिमित्तं विहन्येत। एककर्तृको ह्यपच्छेदो निमित्तत्वेन श्रुतः, अयं तूभयकर्तृकत्वान्नैकेन व्यपदेष्टुं शक्यते, तस्मात् श्रूयमाणस्य निमित्तस्य विहतत्वान्नास्ति प्रायश्चित्तमिति प्राप्ते ब्रूमः—द्वौ ह्यत्रापच्छेदौ तयोरेकैकस्यैकैक एव कर्तेति निमित्तस्य नास्ति विघातः। कालमात्रैक्यादेकापच्छेदभ्रान्तिः तस्मान्निमित्तविघाताभावादस्ति प्रायश्चित्तम्। किञ्च अदक्षिणत्वं सर्वस्वदक्षिणत्वं चेति यत्प्रायश्चित्तद्वयं निमित्तभेदेन श्रुतं तन्निमित्तद्वयसन्निपाते समुच्चेतव्यम्, यद्यदक्षिणत्वसर्वस्वदानयोरन्योन्यविरोधस्तर्हि प्रयोगभेदेन व्यवस्थापनीयम्, अपच्छेदयुक्ते प्रथमप्रयोगे दक्षिणा न दातव्या, उत्तरप्रयोगे सर्वस्वं दातव्यं, सत्यपि प्रयोगभेदे कर्मण एकत्वात् समुच्चय इति प्राप्ते ब्रूमः—न ह्युत्तरप्रयोगेऽपच्छेदो विद्यते। न चासति निमित्ते प्रायश्चित्तं युक्तम्। तस्मात्प्रथमप्रयोग एव निमित्तद्वयवशात्प्रायश्चित्तद्वयं प्राप्तं तच्चान्योन्यविरुद्धं विकल्प्यते। किञ्च उद्गातृप्रतिहर्तृकर्तृकयोरपच्छेदयोर्यौगपद्य समानबलत्वादस्तु प्रायश्चित्तयोर्विकल्पः। यदा तु क्रमेणापच्छेदौ स्यातां तदानीमसञ्जातविरोधित्वेन पूर्वस्य प्रबलत्वात् श्रुतिलिङ्गादाविवोत्तरस्य प्रवृत्तिर्विरुध्यत इति चेत्। मैवम्। श्रुतिलिङ्गादावुत्तरस्य पूर्वसापेक्षत्वात्पूर्वेण विरोधे सत्युत्तरस्योत्पत्तिरेव नास्ति। इह तु ज्ञानद्वयमन्योन्यनिरपेक्षं वाक्यद्वयादुत्पद्यत इत्युत्पत्तिप्रतिबन्धो नास्ति। उत्पद्यमानं चोत्तरज्ञानं स्वविरुद्धस्य पूर्वज्ञानस्य बाधनैवोत्पद्यते। ननु निरपेक्षत्वस्य समानत्वात् पूर्वज्ञानमेवोत्तरस्य बाधकमस्त्विति चेन्न। पूर्वज्ञानोत्पत्तिदशायामविद्यमानस्योत्तरज्ञानस्य बाध्यत्वायोगात्। उत्तरकाले तु स्वयं बाधितं पूर्वज्ञानं कथमुत्तरस्य बाधकं भवेत्, नान्यत्किंचिदुत्तरस्य बाधकं पश्यामः। तस्मादुत्तरकालीनापच्छेदनिमित्तं प्रायश्चित्तमनुष्ठेयम्। किञ्च यद्युद्गाता पश्चादपच्छिद्यते तदा तस्यापच्छेदस्य प्रबलत्वात्तन्निमित्तं प्रायश्चित्तमनुष्ठेयं, तच्च प्रायश्चित्तमीदृशं— प्रथमं प्रयोगं दक्षिणारहितमनुष्ठाय द्वितीयप्रयोगे पूर्वं दित्सिता दक्षिणा दातव्येति। पूर्वं च गवां द्वादशाधिकं शतं दित्सितं तस्य ज्योतिष्टोमदक्षिणारूपेण विहितत्वात्तस्मादुत्तरप्रयोगे द्वादशशतं देयमिति प्राप्ते ब्रूमः—प्रतिहर्तुः प्रथममपच्छेदे सति तन्निमित्तकं

सर्वस्वदानरूपं प्रायश्चित्तं प्रथमप्रयोगे प्राप्तं, तेन च क्रतुस्वभावप्रयुक्तस्य बाधात्सर्वस्वं दित्सितं, न चोद्गात्रपच्छेदेन पश्चाद्भाविना सर्वदित्सा बाध्यत इति शङ्कनीयम्। बाधकस्य दक्षिणान्तरस्य तत्रानुक्तत्वात्। यद्दित्सितं तदुत्तरप्रयोगे देयमित्येतावदेव तत्रोच्यते। दित्सितं च सर्वस्वमित्युक्तम्। अत उत्तरकालीनोद्गात्रपच्छेदनिमित्तेऽपि पुनः प्रयोगे पूर्वकालीनप्रतिहर्त्रपच्छेदप्रयुक्तं सर्वस्वमेव दातव्यमित्यादिकमर्थजातं निरूपणीयमभिप्रेत्य विधिनिरूपणमुपसंहरति—तदेवमिति। तस्मिन्नतीते ग्रन्थ उक्तप्रकारेणेत्यर्थः।

**अर्थबोधिनी**—पिछले विभाग में ऐसे अधिकारों का विवेचन किया गया है, जो अधिकारविधि में पुरुष के विशेषणरूप में सुने जाते हैं; जैसे—**यजेत स्वर्गकामः** में 'स्वर्गकामना'। इसी प्रकार 'अग्निदाह' एवं 'राजत्व' 'स्वाराज्यकामना' आदि। किन्तु इस विभाग में उन अधिकारों का विवेचन किया गया है, जो विधिवाक्य में अधिकारी पुरुष के विशेषण-रूप में नहीं सुने जाते हैं; फिर भी अधिकारी पुरुष के विशेषण-रूप में उनका आक्षेप होता है अर्थात् अधिकारी होने के लिए उनकी अपेक्षा मानी जाती है ( **पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणम्** )। उदाहरण के लिए यागविधायक विधियों में 'अध्ययनविधि द्वारा सिद्ध विद्या' को अधिकारी पुरुष का विशेषण माना जाता है। यद्यपि वहाँ इसका साक्षात् श्रवण नहीं है। कहने का तात्पर्य यह है कि क्रतु ( याग ) का अनुष्ठान करने का अधिकार उसी व्यक्ति को है, जो **स्वाध्यायोऽध्येतव्यः** इस अध्ययनविधि के अनुसार वेदों का अध्ययन करके वेदों के अर्थ का ज्ञान प्राप्त कर चुका हो ( **अध्ययनविधिसिद्धा विद्या** )। यागविधायक विधियों के द्वारा कर्म के अनुष्ठान करने में वेदार्थ के ज्ञान की अपेक्षा होती है ( **क्रतुविधीनामर्थज्ञानापेक्षणीयत्वेन** )। इसलिये अध्ययनविधि के द्वारा जिसे वेदार्थ का ज्ञान हुआ रहता है, उसी पुरुष के प्रति क्रतुविधियों की प्रवृत्ति होती है ( **अध्ययनविधिसिद्धार्थज्ञानवन्तं प्रत्येव क्रतुविधीनां प्रवृत्तेः** ) अर्थात् क्रतुविधियाँ ऐसे पुरुषों के लिये ही क्रतु ( याग ) का विधान करती हैं, जिन्होंने अध्ययनविधि के द्वारा वेदार्थज्ञान प्राप्त कर लिया हो। शूद्र उपनयन का अधिकारी नहीं होता; अतएव वेदाध्ययन का भी अधिकारी नहीं होता। इसीलिये वह क्रतुविधि-विहित कर्मों का भी अधिकारी नहीं होता है।

इसी तरह जिन कर्मों का अनुष्ठान अग्निसापेक्ष होता है, उनके अनुष्ठान करने का अधिकार उन्हीं पुरुषों को है, जिन्होंने नियमपूर्वक अग्न्याधान कर लिया हो। ब्राह्मण, क्षत्रिय एवं वैश्य के लिये ही अग्न्याधान का विधान है, अतएव जिन द्विजों ने नियमपूर्वक अग्न्याधान किया हो, वे ही अग्निसाध्य कर्म के अनुष्ठान का फल प्राप्त कर सकते हैं। शूद्र किसी भी दशा में अग्नि द्वारा अनुष्ठेय कर्म का अधिकारी नहीं हो सकता। आशय यह है कि अग्निसाध्य कर्म में 'आधानसिद्ध अग्निमत्ता' पुरुष का विशेषण होती है। कारण, अग्नि द्वारा अनुष्ठेय कर्मों के अनुष्ठान में अग्नि की अपेक्षा होती है ( अग्नि-

साध्यकर्मणामग्न्यपेक्षत्वेन ), अतएव अग्निसाध्य कर्मों का विधान करने वाली विधियों ( तद्विधीनाम् ) की प्रवृत्ति ऐसे पुरुषों के प्रति ही होती है, जो शास्त्रनिर्धारित अग्न्याधान के नियमों के अनुसार अग्नि का आधान कर चुके होते हैं ( तद्विधीनामाधान-सिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः )।

इसी प्रकार विधिबोधित सभी क्रियाओं के अनुष्ठान करने की 'शक्ति' ( सामर्थ्य ) भी पुरुष का विशेषण होती है, यद्यपि विधिवाक्यों में पुरुष के विशेषणरूप में सामर्थ्य का श्रवण नहीं रहा करता है। उदाहरण के लिये अनुष्ठाता पुरुष की इन्द्रियाँ सशक्त होनी चाहिये, उसका कोई भी अङ्ग विकृत नहीं होना चाहिये; क्योंकि अन्धे, बहरे, लूले, लँगड़े आदि व्यक्ति यागानुष्ठान के लिये समर्थ नहीं हैं। अन्धा आज्यावेक्षण ( आज्य को देखना ) नहीं कर सकता, बहरा अध्वर्यु द्वारा उच्चारण किये गये मन्त्र को नहीं सुन सकता, लूला प्रोक्षण ( छिड़कना ) आदि क्रियाओं का अनुष्ठान नहीं कर सकता और लँगड़ा 'अभिक्रमण' आदि में असमर्थ होता है; अतएव सामर्थ्य भी पुरुष का विशेषण होता है। समर्थ व्यक्ति के प्रति ही विधियाँ भी प्रवृत्त होती हैं। असमर्थ व्यक्ति याग का अनुष्ठान अविकल रूप में नहीं कर सकता, अतएव वह यागफल का भागी न होने के कारण अधिकारी नहीं माना जा सकता।

**आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी** यह एक न्याय—सिद्धान्त है। 'आख्यात' पद अर्थ के वाचक होते हैं। अर्थ का अभिधान करने वाले आख्यातों की सहकारिणी शक्ति ( सामर्थ्य ) होती है। यजेत पद का अर्थ 'याग करना चाहिये' होता है, किन्तु वस्तुतः इसका पूरा अर्थ होता है—'याग करने में समर्थ पुरुष को याग करना चाहिये'। इसी प्रकार 'देखे' का अर्थ 'देखने में समर्थ पुरुष देखे' होता है। इस प्रकार आख्यात के अर्थबोध में शक्ति भी सहायता करती है।

इस प्रकार विधि का विवेचन पूर्ण हुआ।

**विधिप्रकरण समाप्त**



# ( ग ) मन्त्रप्रकरणम्

**प्रसङ्ग**—अब मन्त्र का विवेचन किया जा रहा है—

### ६१. मन्त्रविचारः

**प्रयोगसमवेतार्थस्मारका मन्त्राः। तेषां च तादृशार्थस्मारकत्वेनैवार्थवत्त्वम्। न तु तदुच्चारणमदृष्टार्थम्, सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात्। न च दृष्टस्यार्थस्मरणस्य प्रकारान्तरेणापि सम्भवान्मन्त्राम्नानं व्यर्थमिति वाच्यम्। मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात्।**

**अर्थ**—मन्त्र अनुष्ठान में समवेत द्रव्य, देवता, क्रिया आदि पदार्थों का स्मरण कराते हैं। इस प्रकार से पदार्थों का स्मरण कराने में ही मन्त्रों की सार्थकता है। मन्त्रोच्चारण का अदृष्ट फल सर्वत्र नहीं मानना चाहिए; क्योंकि जब ( स्मरण-रूप ) दृष्ट फल सम्भव हो तो अदृष्ट फल की कल्पना उचित नहीं और यह कहना कि 'अर्थस्मरणरूप दृष्ट प्रयोजन की सिद्धि तो अन्य प्रमाणों से भी हो सकती है, फिर मन्त्रोच्चारण व्यर्थ ही है' भी उचित नहीं है। कारण, **मन्त्रैरेव स्मर्तव्यम्** यह नियमविधि आश्रयणीय है।

मीमांसार्थसंग्रहकौमुदी—

य: सर्वकर्ता सकलात्मरूपश्चन्द्रार्कवह्नीक्षणकश्चिदात्मा।
साम्बो हि सोमार्धविभूषणाढ्यस्तं नौमि देवार्चितपादपीठम्॥१॥

**इदानीं मन्त्ररूपं वेदभागं निरूपयति**—प्रयोगेति। तेषामिति। **मन्त्राणामित्यर्थः**। तादृशार्थेति। **प्रयोगसमवेतार्थेत्यर्थः**। अर्थवत्त्वमिति। **प्रयोजनवत्त्वमित्यर्थः**। **ननु मन्त्रोच्चारणस्यादृष्टार्थकत्वेनाप्युपपत्तेः कुतस्तेषां प्रयोगसमवेतार्थस्मारकत्वेनैव प्रयोजनवत्त्वमित्यत आह**—न त्विति। तदुच्चारणमिति। **मन्त्रोच्चारणमित्यर्थः**। **तत्र हेतुमाह**—दृष्टफलकत्व इति। **ननु दृष्टस्य देवताद्यर्थस्मरणस्य ब्राह्मणवाक्यादिनापि सम्भवान्मन्त्रोच्चारणस्यादृष्टार्थकत्वानङ्गीकारे तदाम्नानस्य वैयर्थ्यापत्तिरित्याशङ्क्य मन्त्रैरेव सोऽर्थः स्मर्तव्य इति नियमविध्यङ्गीकारान्न मन्त्राम्नानस्य वैयर्थ्यमिति परिहरति**—न चेत्यादिना।

**अर्थबोधिनी**—यागानुष्ठान अनेक पदार्थों द्वारा सम्पन्न होता है। ये पदार्थ ( अर्थ ) द्रव्य, देवता, क्रिया आदि रूप से अनेक प्रकार के होते हैं। याग के अनुष्ठान ( प्रयोग )-काल में मन्त्रों का भी पाठ किया जाता है। प्रश्न है कि मन्त्रों का पाठ क्यों किया जाता है? सिद्धान्तपक्ष का मत है कि मन्त्रों के पाठ से उन पदार्थों का स्मरण किया जाता है, जिनका उपयोग अनुष्ठान-काल में किया जाता है। अर्थात् मन्त्र अनुष्ठान ( प्रयोग ) में

समवेत ( सम्बद्ध ) पदार्थों ( क्रिया एवं क्रियाभिन्न ) के स्मारक होते हैं ( प्रयोगसमवेतार्थस्मारका मन्त्राः )। मन्त्रों की सार्थकता ( अर्थवत्त्वम् ) प्रयोगसमवेत अर्थों के स्मरण कराने में ही है।

पूर्वपक्षी मन्त्रोच्चारण को अदृष्टार्थक मानने का आग्रह कर सकता है। वह कह सकता है कि अनुष्ठानकाल में विहित मन्त्रों के यथास्थान पाठ से अदृष्ट उत्पन्न होता है, मन्त्र-पाठ का कुछ भी दृष्ट प्रयोजन नहीं। मन्त्र प्रयोगसमवेत अर्थ के स्मारक नहीं माने जाने चाहिये। सिद्धान्ती पूर्वपक्षी के उक्त कथन का खण्डन करता है। यदि दृष्ट फल की सम्भावना हो तो अदृष्ट फल की कल्पना कहीं भी करनी उचित नहीं है। जबकि मन्त्रोच्चारण का स्मरणात्मक दृष्ट प्रयोजन ( फल ) माना जा सकता है तब उसे मन्त्रोच्चारण का फल न मानकर उसका फल अदृष्ट अर्थात् पुण्योत्पत्ति नहीं माना जा सकता।

यदि पूर्वपक्षी कहे कि प्रयोगसमवेत अर्थों का स्मरण किसी दूसरे उपाय, जैसे ब्राह्मणवाक्यों के द्वारा भी किया जा सकता है, फिर क्यों न मन्त्रोच्चारण को अदृष्टार्थक मान लिया जाय, तो इस आक्षेप का खण्डन करते हुये सिद्धान्ती कह सकता है कि उक्त युक्ति के आधार पर प्रयोगसमवेत अर्थों के स्मरण कराने के सम्बन्ध में **मन्त्रैरेव स्मर्तव्यम्** इस प्रकार नियमविधि आश्रयणीय है; अतः प्रयोगसमवेत अर्थों का स्मरण अनिवार्यतः मन्त्रों द्वारा ही किया जाना चाहिये। 'मन्त्रैरेव स्मर्तव्यम्' इस नियम का आश्रय लेने पर इसे प्रमाण मानने पर मन्त्रों के उच्चारण को अदृष्टार्थक नहीं मान सकते। यदि मन्त्रों द्वारा प्रयोगसमवेत अर्थों का स्मरण नहीं किया जायेगा तो उक्त नियमविधि का उल्लङ्घन हो जायेगा एवं तदनुसार वहाँ यागजन्य अपूर्व निष्पन्न नहीं हो सकेगा—नियमापूर्व की उत्पत्ति नहीं होने से यागानुष्ठान खण्डित समझा जायेगा और अनुष्ठाता को यागजन्य फल की प्राप्ति नहीं हो सकेगी। इसी बात को सारविवेचिनीकार ने संक्षेप में इस प्रकार कहा है—

**एवञ्च नियमविधि-बलात् नियमादृष्टं किञ्चिदुत्पद्यत इत्यङ्गीक्रियते।**

प्रसङ्ग—नियमविधि के स्वरूप का विवेचन—

## ६२. नियमविधिविचारः

**नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिर्नियमविधिः। यथाहुः—**

**विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।**
**तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते।। इति।**

**अस्यार्थः—प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः, यथा 'यजेत स्वर्गकामः' इत्यादिः। स्वर्गार्थकयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात्।**

**पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः। यथा 'व्रीहीनवहन्ति' इत्यादिः। कथमस्य पक्षेऽप्राप्तप्रापकत्वमिति चेत्, इत्थम्—अनेन ह्यवघातस्य वैतुष्यार्थत्वं**

न प्रतिपाद्यतेऽन्वयव्यतिरेकसिद्धत्वात्, किन्तु नियमः। स चाप्राप्तांशपूरणम्। वैतुष्यस्य हि नानोपायसाध्यत्वाद् यदा अवघातं परित्यज्य उपायान्तरं ग्रहीतुमारभते, तदा अवघातस्याप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः। पक्षेऽप्राप्तावघातस्य विधानमिति यावत्।

अर्थ—विविध साधनों से सिद्ध होने वाली क्रिया के अनुष्ठान में अनभिप्रेत साधन होने लगने पर अनभिप्रेत साधन की प्राप्ति कराने वाली विधि को नियमविधि कहा जाता है। कुमारिलभट्ट ने तन्त्रवार्तिक ( १.२.३४ ) के अन्तर्गत विधिरत्यन्तमप्राप्तौ इस श्लोक में नियमविधि एवं अन्य दो विधियों का लक्षण किया है। श्लोक का अर्थ इस प्रकार है—'अत्यन्त अप्राप्त पदार्थ का विधान करने वाली विधि को अपूर्वविधि, पदार्थ की पाक्षिक अप्राप्ति होने पर तद्विधायक वाक्य को नियमविधि और एक अर्थ तथा इतर अर्थ दोनों की प्राप्ति होने पर निवृत्ति का बोध कराने वाली विधि को परिसङ्ख्याविधि कहा जाता है। उक्त श्लोक का स्पष्ट अर्थ इस प्रकार है—अन्य प्रमाणों से जिस पदार्थ का विधान नहीं हुआ रहता है, उस पदार्थ का विधान करने वाली विधि को अपूर्वविधि कहते हैं, जैसे—यजेत स्वर्गकामः यह अपूर्वविधि है। कारण, जिस याग का विधान अन्य किसी प्रमाण से नहीं होता है, ऐसे स्वर्गफलक याग का विधान यह विधि करती है।

पक्ष में अप्राप्त पदार्थ की प्रापक विधि को नियमविधि कहते हैं, यथा—व्रीहीनवहन्ति (धान कूटे जायँ ) यह नियमविधि है। यह विधि अवघात का विधान इसलिये नहीं करती कि धान की भूसी दूर हो जाय, क्योंकि अवघात से भूसी दूर होती है और अवघात के अभाव में नहीं दूर होती; इस प्रकार लोकसिद्ध अन्वय एवं व्यतिरेक से ही इस विषय का ज्ञान हो जाता है। यह विधि नियम का प्रतिपादन करती है। अप्राप्त अंश की प्राप्ति को ही नियम कहा जाता है। तुषविमोक अनेक उपायों से सिद्ध हो सकता है, अतएव जब अवघात को छोड़कर अन्य किसी उपाय को ग्रहण किया जाने लगता है, तब ऐसी स्थिति में यह विधि अप्राप्त अवघात का विधान करके अप्राप्त अंश की पूर्ति कराती है। सारांश यह है कि नियमविधि के द्वारा अप्राप्त अंश की पूर्ति-रूप नियम का ही बोध कराया जाता है। यहाँ पर पक्ष में अप्राप्त अवघात का प्रापण ही नियम है।

मीमांसार्थसंग्रहकौमुदी—ननु किंलक्षणको नियमविधिर्यदाश्रयणादन्यस्यार्थस्मारकस्य व्यवच्छेदो लभ्यत इत्याशङ्क्य नियमविधिलक्षणमाह—नानासाधनेति। तत्र सम्मतिमाह—यथाहुरिति। तां व्याचष्टे—अस्यार्थ इत्यादिना। तत्रापि विधिरत्यन्तमप्राप्ताविति प्रथमपादमपूर्वविधिपरं व्याचष्टे—प्रमाणान्तरेणेति। प्रमाणान्तरेण तदर्थत्वेनाप्राप्तस्य तदर्थत्वेन प्रापको यो विधिः सोऽपूर्वविधिरित्यर्थः। तत्रोदाहरणमाह—यथेति। तस्यापूर्वविधित्वे हेतुमाह—

स्वर्गेति। स्वर्गार्थकत्वेन प्रमाणान्तरेणाप्राप्तस्य यागस्य तदर्थत्वेन 'यजेत स्वर्गकाम' इत्यनेन विधानाद्भवत्ययमपूर्वविधिरित्यर्थः।

नियमः पाक्षिके सतीति द्वितीयपादं प्रकृते सम्मतिरूपं व्याचष्टे—पक्षेऽप्राप्तस्येति। तत्रोदाहरणमाह—यथेति। ननु व्रीहीनवहन्तीत्यस्यावघातविधेः कथं पक्षेऽप्राप्तस्यावघातस्य प्रापकत्वं स्वीक्रियते, वैतुष्यार्थत्वेन प्रमाणान्तरेणाप्राप्तस्य तस्य तदर्थत्वेनानेन विधानोपपत्तेरित्याशङ्क्यानेन हि विधिनावघातस्य वितुषतार्थत्वं न प्रतिपाद्यते, तस्य तदर्थत्वेनान्वयव्यतिरेकसिद्धत्वात्, अवघातादिसत्त्वे व्रीहीणां वैतुष्यं जायते, तदसत्त्वे तदभाव इति सर्वजनीनमिति परिहरति—कथमित्यादिना। इत्थमिति। अनेन वक्ष्यमाणप्रकारेणेत्यर्थः। ननु यद्यवघातादीनां सर्वेषामेव वैतुष्यार्थत्वमन्वयव्यतिरेकाभ्यां सिद्धं तदा 'व्रीहीनवहन्ती'-त्यवघातविधेरन्वयव्यतिरेकसिद्धावघातप्रापकत्वेन वैयर्थ्यमेवापद्येत अनुवादकत्वादित्याशङ्क्ते—किन्त्विति। नास्य विधेरनुवादकत्वेन वैयर्थ्यं सम्भवति, नियमविधायकत्वेनानुपपत्तेरिति परिहरति—नियम इति। व्रीहीणां वैतुष्यमवघातेनैव सम्पादनीयमिति नियमः प्रतिपाद्यत इत्यर्थः। ननु तादृशनियमप्रतिपादनेऽत्र कीदृशो वाक्यार्थो भवतीत्यत आह—स चेति। स एवाप्राप्तांशपूरणरूपो नियमोऽत्र वाक्यार्थ इत्यर्थः। ननु कथमत्राप्राप्तांशो लभ्यते यस्य पूरणेनास्य विधेः सार्थक्यमित्यतोऽत्राप्राप्तांशपूरणरूपमेव वाक्यार्थमुपपादयति—वैतुष्येत्यादिना। उपपादितमप्राप्तांशपूरणरूपं वाक्यार्थमुपसंहरति—अतश्चेति। अस्य विधेरप्राप्तांशपूरणरूपनियमप्रतिपादकत्वाच्चेत्यर्थः। पर्यवसितार्थमाह—पक्ष इति यावदिति। पर्यवसन्नमित्यर्थः।

**अर्थबोधिनी**—विभागसङ्ख्या ६१ में **मन्त्रैरेव स्मर्तव्यम्** इस नियमविधि के आश्रय का उल्लेख किया गया है; अतएव नियमविधि का स्वरूप क्या है? इस प्रकार नियमविधि के स्वरूप के विषय में जिज्ञासा होती है। प्रकृत विभाग में नियमविधि के स्वरूप पर विचार किया गया है। नियम विधि का लक्षण देकर लक्षण की पुष्टि के लिये तन्त्रवार्तिक का एक श्लोक उद्धृत किया गया है। श्लोक विधि का एक नवीन विभाजन प्रस्तुत करता है। यहाँ विधि के तीन प्रभेद माने गये हैं—अपूर्व विधि, नियम विधि एवं परिसङ्ख्या विधि। श्लोक के अभिप्राय को स्पष्ट करते समय ग्रन्थकार ने लक्षण एवं उदाहरणों द्वारा तीनों विधियों के स्वरूप पर प्रकाश डाला है। परिसङ्ख्या विधि के स्वरूप का निरूपण अग्रिम विभागों में किया गया है।

तन्त्रवार्तिक ( १.२.३४ ) में कुमारिल भट्ट ने उपर्युक्त तीनों विधियों का लक्षण इस प्रकार किया है—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते।।

यहाँ सर्वप्रथम विधि का लक्षण दिया गया है। यहाँ 'विधि' शब्द अपूर्वविधि का वाचक है। कुमारिल के अनुसार अपूर्वविधि का लक्षण है—**विधिरत्यन्तमप्राप्तौ**। 'अत्यन्तम् अप्राप्तौ विधिः' का अर्थ है—**विधेयार्थस्य केनापि प्रमाणेन अज्ञातत्वे सति तस्य विधायको वाक्यो विधिः** अर्थात् जिस पदार्थ का ज्ञान किसी भी प्रमाण से नहीं होता है, उस पदार्थ का विधान करने वाली विधि को विधि अर्थात् अपूर्वविधि कहते हैं। **अत्यन्तमप्राप्ति** का अर्थ है—किसी अन्य प्रमाण से बिल्कुल ज्ञान न होना। **यजेत स्वर्गकामः** इस विधिवाक्य से ज्ञात होता है कि यागानुष्ठान से स्वर्ग की प्राप्ति होती है, किन्तु स्वर्गसाधनभूत याग का ज्ञान एतद् वाक्यातिरिक्त प्रत्यक्षादि किसी अन्य प्रमाण से नहीं होता है। इस प्रकार विधेय—याग **अत्यन्तमप्राप्त** है। अत्यन्तमप्राप्त याग का विधान **यजेत स्वर्गकामः** विधि करती है, अतएव **यजेत स्वर्गकामः** वाक्य को अपूर्वविधि माना जाता है।

कुमारिल के **विधिरत्यन्तमप्राप्तौ** इस अपूर्वविधिलक्षण की व्याख्या लौगाक्षिभास्कर ने इन शब्दों में किया है—**प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः**। याग स्वर्गप्राप्ति का साधन है; इसमें प्रमाण है—**यजेत स्वर्गकामः** यह वाक्य। इस प्रकार **यजेत स्वर्गकामः** प्रमाण है। **यजेत स्वर्गकामः** वाक्य के अतिरिक्त प्रत्यक्ष, अनुमान एवं शब्द आदि प्रमाणान्तर हैं। 'अप्राप्त' शब्द का अर्थ है—अज्ञात एवं 'प्रापक' शब्द का अर्थ है—ज्ञापक। विधेयार्थ—याग स्वर्गार्थक ( स्वर्गरूप प्रयोजन वाला ) है, जिसका विधान अन्य किसी प्रमाण से न होकर केवल **यजेत स्वर्गकामः** वाक्य से होता है, अतएव यह वाक्य विधि या अपूर्वविधि होता है। विभागसङ्ख्या १९ और २० में जिसे उत्पत्तिविधि कहा गया है, उसी को यहाँ विधि या अपूर्वविधि कहा गया है।

कुमारिल की उक्त कारिका में **नियमः पाक्षिके सति** अंश नियमविधि का परिचय देता है। **नियमः** यह पद लक्ष्य है और **पाक्षिके सति** अंश लक्षण। **पाक्षिके सति** का अर्थ है—विधेय की पाक्षिक अप्राप्ति होने पर। अभिप्राय यह है कि विधेयार्थ की पाक्षिक अप्राप्ति होने पर अप्राप्त विधेयांश की प्रापक विधि 'नियमविधि' कहलाती है। **विधिरत्यन्तमप्राप्तौ** के अप्राप्ति ( शब्दार्थ ) के साथ **पाक्षिके** इसके अर्थ का अन्वय विवक्षित है। तब **पाक्षिके सति** का अर्थ **विधेयार्थस्य पक्षे अप्राप्तौ सत्याम्** हुआ। इसके अनुसार पक्ष में अप्राप्त अर्थ के प्रापक विधिवाक्य को नियमविधि कहा जाता है। इसीलिये लौगाक्षिभास्कर ने **पाक्षिके सति** का व्याख्यान इस प्रकार किया है—**पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः**। इसी व्याख्या का विस्तार उदाहरणसहित किया गया है, जिससे लौगाक्षिभास्कर के नियमविधिलक्षण **नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिर्नियमविधिः** का भी स्पष्टीकरण हो जाता है।

बहुत-सी ऐसी क्रियायें होती हैं, जिनका सम्पादन अनेक साधनों द्वारा सम्भव होता

है। इस प्रकार की क्रिया को **नानासाधनसाध्य** कहा जा सकता है। कभी-कभी प्रासङ्गिक क्रिया के सम्पादन हेतु अनभिप्रेत साधन की प्राप्ति होती या होने लगती है ( एकसाधनप्राप्तौ ), अभिप्रेत की नहीं। ऐसी स्थिति में अभिप्रेत अप्राप्त साधन की प्राप्ति जिस वाक्य के द्वारा करायी जाती है, उसे नियमविधि कहा जाता ( **अप्राप्तस्यापरसाधनस्य प्रापको विधि-र्नियमविधिः** ) है। उदाहरण के लिये व्रीहितुषविमोक ( धान से भूसी हटाना ) एक क्रिया है, जिसका अनुष्ठान ( १ ) नखविदलन ( नाखूनों से छीलना ) से हो सकता है, ( २ ) अश्मकुट्टन ( पत्थर से कूटना ) से हो सकता है, ( ३ ) अवहनन ( मूसल से कूटना ) से हो सकता है। इस प्रकार अन्य साधनों से भी तुषविमोक हो सकता है।[1] इस प्रकार तुषविमोक के अनेक साधनों द्वारा सम्पाद्य होने पर जब तुषविमोक में ( अवघात के अतिरिक्त ) नखविदलन आदि किसी भी साधन की प्राप्ति होने लगती है तब अवघात की अप्राप्ति हो उठती है। अतः उस अप्राप्त अविघात को प्राप्त कराने के लिये नियमविधि की प्रवृत्ति होती है। नियमविधि—( **व्रीहीनवहन्ति** ) यहाँ पर अप्राप्त अवघात का विधान करती है। ध्यान रहे, प्रकृत स्थल में अनभिप्रेत एक साधन की प्राप्ति हो रही थी, जिसे बाध कर अभिप्रेत अप्राप्त साधन—अवघात का विधान किया गया है। अवघात द्वारा ही वैतुष्य ( तुषविमोक ) होने पर अपूर्व की उत्पत्ति मानी जाती है, नखविदलन द्वारा होने पर नहीं; इसीलिये अवघात का नियमन किया जाता है। आशय यह है कि अवघात का प्रयोजन नियमापूर्व की उत्पत्ति है, तुषविमोकमात्र नहीं। अवघात होने पर तुषविमोक होता है ( अन्वय ) एवं अवघात के अभाव में तुषविमोक नहीं होता ( व्यतिरेक )। इस प्रकार अन्वयव्यतिरेक द्वारा तुषविमोक की सिद्ध्यसिद्धि लोकतः प्राप्त है—सर्वविदित है; अतएव अवघात का विधान तुषविमोक के लिये नहीं है, अपितु जब उपायान्तर का ग्रहण होने लगता है और इस प्रकार अवघात की वैकल्पिक पक्ष में प्राप्ति नहीं होती देखी जाती है तब अवघात का विधान **व्रीहीनवहन्ति** इस नियमविधि द्वारा किया जाता है। इस प्रकार अप्राप्त अवघात का विधान करके अप्राप्त अंश की पूर्ति की गई। इसी अप्राप्तांशपूरण को नियम् कहा जाता है ( **किन्तु नियमः। स चा प्राप्तांशपूरणम्** )।

नियमविधिस्थल में अप्राप्ति की प्राप्ति करायी जाती है। यदि विधेय की प्राप्ति हो ही रही-हो तो यहाँ नियमविधि की प्रवृत्ति नहीं होगी। यदि अवघात प्राप्त ही हो रहा हो तो एक तो अवघात का विधान ही नहीं किया जा सकता, क्योंकि उसकी प्राप्ति हो ही रही है और प्राप्त का विधान करने पर पुनरुक्ति दोष हो जायेगा। इस प्रकार ऐसे स्थलों पर नियमविधि की प्रवृत्ति नहीं हो सकती। इसलिये नियमविधि स्थल में—१. अनभिप्रेत साधन की प्राप्ति होने लगती है, २. अभिप्रेत साधन ( अंश ) की अप्राप्ति हो उठती है

१. "वितुषीभावरूपं प्रयोजनं हि अवहननेन नखविदलनेन अश्मकुट्टनादिना वेत्यनेकैरुपायैः साधयितुं शक्यते। ( सारविवेचिनी )

और ( ३ ) अप्राप्त अंश का विधान ( पूर्ति ) किया जाता है। नियमविधिस्थल में तीनों विशेषतायें समुदित रूप में रहती हैं।

**प्रसङ्ग**—अब परिसङ्ख्याविधि का निरूपण किया जा रहा है—

## ६३. परिसङ्ख्याविधिलक्षणम्

**उभयोश्च युगपत्प्राप्ताावितरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः। यथा—'पञ्च पञ्चनखा भक्ष्या' इति। इदं हि वाक्यं न पञ्चनखभक्षणपरं, तस्य रागतः प्राप्तत्वात्। नापि नियमपरं, पञ्चनखापञ्चनखभक्षणस्य[1] युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात्। अत इदमपञ्चनखभक्षणनिवृत्तिपरमिति[2] भवति परिसङ्ख्याविधिः।**

**अर्थ**—दोनों पदार्थों की एक ही काल में प्राप्ति होने पर दोनों में से एक पदार्थ की निवृत्ति का बोध कराने वाली विधि को परिसङ्ख्याविधि कहा जाता है। उदाहरण के लिये **पञ्च पञ्चनखा भक्ष्याः** ऐसा ही एक विधिवाक्य है। इस वाक्य का अर्थ है—पञ्जे वाले पाँच जीव भक्ष्य हैं। यह वाक्य पाँच पञ्चनख जीवों के भक्षण का विधान नहीं करता; क्योंकि पञ्चनखभक्षण पुरुष को स्वभावतः राग से ही प्राप्त है। उक्त विधिवाक्य अप्राप्तांश की पूर्तिरूप नियम का भी विधान नहीं करता। कारण, यहाँ एक पक्ष में पञ्चनखभक्षण की अप्राप्ति नहीं होती है, जिसकी प्राप्ति कराने के कारण उक्त वाक्य को नियमविधि माना जाय। पक्ष में अप्राप्ति इसलिये नहीं है कि जीव चाहे पञ्चनख हों अथवा अपञ्चनख, सभी सर्वदा पुरुष को भक्ष्यरूप में स्वाभाविक राग से प्राप्त हैं। अतएव **पञ्च पञ्चनखा भक्ष्याः** यह वाक्य पञ्च पञ्चनख से अतिरिक्त जीवों के भक्षण की निवृत्ति का परक है। इसी को परिसङ्ख्याविधि कहते हैं।

मीमांसार्थसंग्रहकौमुदी—**तत्र चेत्याद्युत्तरार्धं परिसङ्ख्याविधिपरं व्याचष्टे—उभयोश्चेति। तत्रोदाहरणमाह—यथेति। अस्यात्यन्तमप्राप्तविधित्वरूपमपूर्वविधित्वमाशङ्क्य निराचष्टे—इदं हीति। तत्र हेतुमाह—तस्येति। पञ्चनखभक्षणस्येत्यर्थः। अस्य वाक्यस्य नियमविधित्वमपि निराचष्टे—नापीति। तत्रापि हेतुमाह—पञ्चनखेति। अत इति। विधिद्वयासम्भवादित्यर्थः। इदमिति। 'पञ्च पञ्चनखा भक्ष्या' इति वाक्यमित्यर्थः। अपञ्चनखभक्षणवृत्तिस्तु न केनापि प्राप्तां ततश्च तद्विधायकत्वेन नास्य वाक्यस्यानुवादकत्वमपि। तथा च सैवात्र वाक्यार्थ इति भावः।**

**अर्थबोधिनी**—परि उपसर्ग का अर्थ 'वर्जन' और संख्या शब्द का अर्थ 'बुद्धि' होता है, अतएव **परिसङ्ख्या** शब्द का अर्थ **वर्जनबुद्धि** हुआ। वर्जनबुद्धि को उत्पन्न करने वाली विधि को 'परिसङ्ख्याविधि' कहा जाता है।[3]

---

१. पाठान्तर—पञ्चपञ्चनखापञ्चनखभक्षणस्य।
२. पाठान्तर—इदमपञ्चपञ्चनखभक्षणनिवृत्तिपरमिति।
३. परिसङ्ख्या वर्जनबुद्धिः, तज्जनको विधिः परिसङ्ख्याविधिरित्यर्थः। ( सारविवेचिनी )

परिसङ्ख्याविधि का सर्वाधिक प्रचलित उदाहरण **पञ्च पञ्चनखा भक्ष्याः** है। प्रकृत उदाहरण वाल्मीकि रामायण के किष्किन्धा काण्ड के एक श्लोक का अंश है। सम्पूर्ण श्लोक इस प्रकार है—

**पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव।**
**शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः॥**[1]

बालि रामचंद्र से कहते हैं कि—हे राम! खरगोश, साही, गोह[2], गैडा और कछुआ—ये पाँच पञ्चनख ( जीव ) ब्राह्मण एवं क्षत्रिय के द्वारा भक्ष्य हैं।

जैसाकि अभी बताया जा चुका है, परिसङ्ख्या का अर्थ 'वर्जनबुद्धि' होता है, तभी तो **पञ्च पञ्चनखा भक्ष्याः** यह परिसङ्ख्या विधि भी वर्जनबुद्धि उत्पन्न करती है। उक्त विधि के द्वारा शशक आदि पाँच पञ्चनखों के भक्षण का विधान नहीं है; अपितु यह विधि उक्त पाँच पञ्चनखों के अतिरिक्त जीवों के भक्षण से पुरुष को निवृत्त करती है; किन्तु निवृत करने के कारण **पंञ्च पञ्चनखा भक्ष्याः** इस वाक्य को निषेधवाक्य नहीं मान लेना चाहिये; क्योंकि सबसे बड़ी विशेषता यह है कि निषेधस्थल में 'नञ्' का अनिवार्यतः प्रयोग होता है, किन्तु परिसङ्ख्यास्थल में 'नञ्' का प्रयोग नहीं होता है। परिसङ्ख्या की विधिरूपेण प्रवृत्ति होती है, इसलिये परिसङ्ख्या को विधि कहा जाता है। भले ही उसका अर्थ निवृत्ति में पर्यवसित होता हो।

**पञ्च पञ्चनखा भक्ष्याः** को अपूर्वविधि अर्थात् उत्पत्तिविधि नहीं माना जा सकता। कारण, अपूर्वविधिस्थल में विधेय अत्यन्त अप्राप्त है; किन्तु प्रकृतस्थल में पञ्चनखभक्षण रागतः प्राप्त है। आशय यह है कि क्षुधा की तृप्ति करने की इच्छा सभी पुरुषों के लिये स्वाभाविक है। जिस पदार्थ को प्राप्त करने की स्वभावतः इच्छा होती है, उसे 'स्वभावतः प्राप्त' या 'रागतः प्राप्त' कहते हैं। क्षुधा का निवारण मांसभक्षण से भी होता है, अतएव क्षुधित व्यक्ति के लिये प्रत्येक जीव का भक्षण रागतः प्राप्त है, वे जीव चाहे पञ्चनख ( पाँच नाखूनों वाले अर्थात् पञ्जे वाले ) हों अथवा अपञ्चनख ( जिनके पाँच नाखून नहीं होते, जैसे—घोड़ा, गाय आदि )। पञ्चनख जीवों के अन्तर्गत ही शशक आदि पञ्च पञ्च-पञ्चनख जीव भी होते हैं। इस प्रकार 'पञ्च पञ्चनखभक्षण' की प्राप्ति हो जाती है। फिर 'पञ्च पञ्चनखभक्षण' को अत्यन्त अप्राप्त कैसे माना जाता सकता है, जिसका विधान मानकर

---

१. यह श्लोक रामेश्वरकृत कौमुदी से उद्धृत किया गया है, किन्तु सारविवेचिनी के अनुसार श्लोक का रूप यह होना चाहिये—

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव।
शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः॥

२. वैसे शब्दकोश में 'गोधा' का अर्थ 'घड़ियाल' और 'गोधिका' का अर्थ 'गोह' किया गया है।

पञ्च पञ्चनखा भक्ष्याः को अपूर्व विधि माना जाय। इदं वाक्यं न पञ्चनखभक्षणपरं तस्य रागतः प्राप्तत्वात् वाक्य द्वारा ग्रन्थकार ने पञ्च पञ्चनखा भक्ष्याः इस वाक्य को अपूर्वविधि मान लेने का खण्डन किया है।

पञ्च पञ्चनखा भक्ष्याः इस वाक्य को नियमविधि भी नहीं माना जा सकता ( नापि नियमपरम् )। जैसा कि अभी बतलाया जा चुका है, पञ्चनख भक्षण और अपञ्चनखभक्षण— इन दोनों की एक साथ प्राप्ति होने के कारण ( **पञ्चनखापञ्चनखभक्षस्य युगपत्प्राप्तेः** ) पक्ष में पञ्चपञ्चनखभक्षण की अप्राप्ति नहीं होती ( **पक्षेऽप्राप्त्यभावात्** ); फिर 'पञ्च पञ्चनखा भक्ष्याः' को नियमविधि कैसे मान लिया जाय? नियमविधि होने के लिए आवश्यक है कि वाक्य पक्ष में अप्राप्त पदार्थ का विधायक हो, जैसा कि नियमविधि का लक्षण है— **पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः**[1]।

इसलिए 'पञ्च पञ्चनखा भक्ष्याः' वह विधि शशक आदि पाँच पञ्चनखों के अतिरिक्त अन्य जीवों के भक्षण की निवृत्ति की बोधिका होती है। इस प्रकार निवृत्तिबोधक अर्थात् वर्जनबुद्धिजनक होने के कारण ही प्रकृत वाक्य को परिसङ्ख्याविधि कहा जाता है। जिन जीवों के भक्षण की निवृत्ति अभिप्रेत है, वे दो श्रेणियों में इस प्रकार विभक्त किये जा सकते हैं—

१. अपञ्चनख—जिन जीवों के पञ्चनख अर्थात् पञ्जे नहीं होते।

२. खरगोश, साही, गोह, गैंडा और कछुआ—इन पाँच पञ्चनखों के अतिरिक्त अन्य सभी पञ्चनख जीव।

प्रकृत स्थल में 'पञ्चपञ्चनखभक्षण' एवं तदतिरिक्त 'अपञ्चपञ्चनखभक्षण' इन दो की एक ही काल में प्राप्ति हो रही थी, जिनमें से एक अपञ्चपञ्चनखभक्षण की व्यावृत्ति की गई है ( **उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः** )। अभिप्राय यह है कि परिसङ्ख्या-स्थल में नियमविधि की भाँति पाक्षिक प्राप्ति नहीं होती; अपितु दोनों पदार्थों की युगपत्—एक काल में ही प्राप्ति होती है। इन दोनों में से एक की निवृत्ति की जाती है।

**इदं हि वाक्यं न पञ्चनखभक्षणपरम्** के स्थान पर **इदं हि वाक्यं न पञ्चपञ्चनखभक्षणपरम्** होना चाहिये; क्योंकि **पञ्चपञ्चनखा भक्ष्याः** इस परिसङ्ख्याविधि में 'पञ्च' पद का भी प्रयोग किया गया है। इस स्थल पर मीमांसान्यायप्रकाश में **इदं हि वाक्यं न भक्षणविधिपरम्** यह पाठ प्राप्त होता है। इसी प्रकार **इदमपञ्चनखभक्षणनिवृत्तिपरम्** पाठ भी अनेक पुस्तकों में प्राप्त होता है; किन्तु इस पाठ को शुद्ध नहीं माना जाता; क्योंकि अपञ्चपञ्चनखों के भक्षण की निवृत्ति होती है, न कि केवल अपञ्चनखों के भक्षण

१ देखिए—विभागसङ्ख्या-६२

की निवृत्ति होती है। अतएव यहाँ **अपञ्चपञ्चनखभक्षणनिवृत्तिपरम्** पाठ समीचीन माना जाता है।[१] चिन्नस्वामिशास्त्री ने सूचित किया है कि मीमांसान्यायप्रकाश में भी इसी स्थल पर **अपञ्चनखभक्षणनिवृत्तिपरम्** पाठ अनेक पुस्तकों में प्राप्त हुआ है, किन्तु व्याख्या के कष्टसाध्य होने के कारण उन्होंने इस पाठ को छोड़ दिया तथा अन्य पुस्तकों में **पञ्चातिरिक्तपञ्चनखभक्षणनिवृत्तिपरम्** इस पाठ को ग्रहण किया है।[२]

**प्रसङ्ग**—अब परिसङ्ख्याविधि के भेदों का निरूपण हो रहा है—

### ६४. परिसङ्ख्याया भेदद्वयम्

**सा च द्विविधा—श्रौती लाक्षणिकी चेति। तत्र 'अत्र हि एव आवपन्ति' इति श्रौती परिसङ्ख्या। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। 'पञ्च पञ्चनखा भक्ष्याः' इति तु लाक्षणिकी। इतरनिवृत्तिवाचकपदाभावात्। अत एवैषा त्रिदोषग्रस्ता।**

**अर्थ**—परिसङ्ख्याविधि के दो प्रभेद हैं—१. श्रौती एवं २.लाक्षणिकी। श्रौती परिसङ्ख्याविधि का उदाहरण **अत्र हि एव आवपन्ति**[३] ( यहीं पर आवाप—शब्द-प्रक्षेपण करते हैं ) है। प्रकृत उदाहरण में श्रुति 'एव' शब्द से पवमान के अतिरिक्त अन्य स्तोत्रों की निवृत्ति का बोध होता है, इसलिये इसे श्रौती परिसङ्ख्या कहते हैं। लाक्षणिकी परिसङ्ख्याविधि का उदाहरण **पञ्च पञ्चनखा भक्ष्याः** है, क्योंकि यहाँ निर्दिष्ट से अतिरिक्त की निवृत्ति का सूचक 'एव' जैसा कोई पद सुना नहीं जाता, अपितु लक्षण द्वारा उसकी कल्पना करनी पड़ती है, अतएव यह लाक्षणिकी परिसङ्ख्या तीन दोषों से युक्त है।

**मीमांसार्थसंग्रहकौमुदी**—**सा च परिसंख्या द्विविधेत्याह—सा चेति। आद्यामुदाहरति—तत्रेति। द्वयोः परिसङ्ख्ययोर्मध्य इत्यर्थः। अत्रेति। प्रकृत इत्यर्थः। अवयन्तीति। अवजानन्तीत्यर्थः, गायन्तीति यावत्। श्रौत्याः परिसङ्ख्यायास्तत्त्वे हेतुमाह—एवकारेणेति। द्वितीयामुदाहरति—पञ्चेति। पञ्च पञ्चनखास्तु 'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव। शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः' इत्यादिवचनोदाहृता बोध्याः। अस्या अपि तत्त्वे हेतुमाह—इतरनिवृत्तीति। अत एवेति। इतरनिवृत्तिवाचकपदाभावादित्यर्थः। एषेति। लाक्षणिकीत्यर्थः।**

**अर्थबोधिनी**—परिसङ्ख्या के दो भेद होते हैं—श्रौती और लाक्षणिकी। परिसङ्ख्या द्वारा प्राप्त दो पदार्थों में से विधिश्रुत से इतर की व्यावृत्ति की जाती है। **पञ्च पञ्चनखा**

१. देखिये—अर्थसंग्रह ( गजेन्द्रगदकरव्याख्या )

२. अत्रापञ्चनखभक्षणनिवृत्तिपरमित्येव पाठः उपलभ्यते मुद्रितपुस्तकेषु प्रायशः तथापि अपञ्चनखेत्यस्य पञ्चातिरिक्तपञ्चनखेत्येव व्याख्यातव्यतया क्लिष्टकल्पनापत्तेः पञ्चातिरिक्तपञ्चनखेत्येव पाठं मैसूरपुरे तैलाङ्गाक्षरेषु मुद्रितपुस्तके लिखितपुस्तकेषु चोपलब्धवद्भिरस्माभिः स एव पाठो मूले निवेशितः। ( सारविवेचिनी )

३. पाठान्तर—अत्र ह्येवावयन्ति। 'आवयन्ति' का अर्थ गायन्ति ( गाते हैं ) होता है।

भक्ष्याः विधि में 'पञ्चपञ्चनखभक्षण' श्रुत है। विधिश्रुत से इतर हुआ—'अपञ्चपञ्चनखभक्षण'। इसी की व्यावृत्ति की जाती है। जिस परिसंख्या में इतरव्यावर्तक शब्द साक्षात् श्रुत होता है, उसे श्रौती परिसङ्ख्या कहते हैं। यथा—**अत्र ह्येवावपन्ति** इस वाक्य में 'एव' शब्द इतरव्यावर्तक है; अतएव यह वाक्य श्रौती परिसङ्ख्या माना जाता है।

**अत्र ह्येवावपन्ति** वाक्य का अर्थ है—'यहीं पर आवाप होता है'। यहाँ आवाप का अर्थ है—सामों का प्रक्षेप[1]—अतिरिक्त सामशब्दों का योग। पवमान क्रिया के प्रसङ्ग में कहा गया है कि—**त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति, अत एवोद्वपन्ति।**[2] 'उद्वाप' शब्द का अर्थ 'उद्धार' अर्थात् 'निष्कासन' ( निकाल देना ) होता है।[3] उक्त विवेचन से स्पष्ट हो जाता है कि सामों का आवाप एवं उद्वाप केवल पवमान के ही गायत्री, बृहती एवं अनुष्टुप् मात्र तीन छन्दों में होता है। इस 'अत्र ह्येवावपन्ति' का परिसङ्ख्याबोधित अर्थ हुआ—**( गायत्रीबृहत्यनुष्टुप् ) एतत्त्रितयातिरिक्तेषु छन्दस्सु पवमानातिरिक्तस्तोत्रेषु वा न समावापः कार्य।**[4] सारांश यह कि आवाप पवमान के उक्त तीन छन्दों के अतिरिक्त अन्य स्थल पर नहीं करना चाहिये।

**अत्र ह्येवावपन्ति** प्राठ प्राचीन प्रतियों एवं व्याख्याओं में मिलता है, चित्रस्वामी ने अशुद्ध होने के कारण इस पाठ को अगाह्य माना है।[5]

जिस परिसङ्ख्या विधि में 'एव' आदि इतरव्यावर्तक शब्द साक्षात् श्रुत नहीं होता; अपितु लक्षणा द्वारा इतरव्यावर्तक शब्द की कल्पना की जाती है, उसे 'लाक्षणिकी परिसङ्ख्या कहते हैं।[6] **पञ्च पञ्चनखा भक्ष्याः** वाक्य में 'एव' जैसे इतरव्यावर्तक पद का प्रयोग नहीं किया गया है, अपितु कल्प्य है; इसलिये इस वाक्य को लाक्षणिकी परिसङ्ख्या माना जाता है।

इतरव्यावर्तक शब्द की कल्पना की जाने के कारण लाक्षणिकी परिसङ्ख्या में तीन दोष होते हैं, जिनका विवेचन अग्रिम विभाग में किया जायेगा।

---

१. देखिये—तत्र सङ्ख्यासम्पत्त्यर्थं स्थानान्तरादानीतानां साम्नां पवमानस्तोत्रेषु तदितरस्तोत्रेषु च समुच्चयेनावापः प्राप्तः। तथा आवापः प्रक्षेपः। ( सारविवेचिनी )

२. सारविवेचिनी।

३. उद्वाप उद्धारः निष्कासनमिति यावत्। ( सारविवेचिनी )

४. सारविवेचिनी।

५. एवं च सति यदत्रार्थसंग्रहव्याख्यातृभिः शिवयोगिभिक्षुभिः अत्र ह्येवावपन्ति इति स्वकपोलकल्पितं पाठमवलम्ब्य अवयन्तीति अवजानन्तीत्यर्थः गायन्तीति यावत् इति व्याख्यातम्, यदपि कैश्चित् एतद्ग्रन्थव्याख्याने पवमानसंज्ञकनानास्तोमलक्षणानि सामानि स्तोमाख्यमन्त्राणाम् इत्याद्किमुक्तं तत्सर्वं सम्प्रदायागतशास्त्रीयपदार्थज्ञानमूलकमित्युपेक्षितव्यम्। ( सारविवेचिनी )

६. यत्र शक्तशब्दो नास्ति, निवृत्तिबोधनं तु लक्षणया सा लाक्षणिकीत्यर्थः। ( सारविवेचिनी )

प्रसङ्ग—अब लाक्षणिकी परिसङ्ख्या के तीन दोषों का निरूपण किया जा रहा है—

**६५. परिसङ्ख्याया दोषत्रयम्**

**दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति। तदुक्तम्—**

**श्रुतार्थस्य परित्यागादश्रुतार्थप्रकल्पनात्।**
**प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदूषणा।। इति।**

**श्रुतस्य पञ्चपञ्चनखभक्षणस्य हानात्, अश्रुताया अपञ्चपञ्चनखभक्षणनिवृत्तेः कल्पनात्, प्राप्तस्य चापञ्चपञ्चनखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम्। प्राप्तबाधस्त्वर्थनिष्ठः। इति दिक्।**

**अर्थ**—लाक्षणिकी परिसङ्ख्या के तीन दोष ये हैं—१. श्रुतहानि, २. अश्रुतकल्पना और ३. प्राप्तबाध। कहा भी गया है कि 'परिसङ्ख्या'—१. श्रुत अर्थ के परित्याग, २. अश्रुत अर्थ की कल्पना और ३. रागतः प्राप्त की बाधा—इस प्रकार तीन दोषों से युक्त होती है। पञ्च पञ्चनखा भक्ष्याः इस लाक्षणिकी परिसंख्या में उक्त तीन दोषों को इस प्रकार स्पष्टतः देखा जा सकता है—**पञ्च पञ्चनखा भक्ष्याः** का अर्थ अपञ्चपञ्चनखभक्षण का परित्यागरूप प्रथम दोष आपन्न हुआ। विधि में 'अपञ्चपञ्चनखभक्षणनिवृत्ति' को नहीं सुना जाता है, तथापि यहाँ विधिवाक्यों के अर्थरूप में इसकी कल्पना की गई है। इस प्रकार उक्त कल्पना दूसरा दोष हुआ। पञ्च पञ्चनख जीवों एवं तदितर जीवों का भक्षण रागतः प्राप्त है, फिर भी 'इतर जीवों के भक्षण की निवृत्ति' विधि द्वारा समझनी होती है, अतएव 'प्राप्तनिवृत्ति' अर्थात् 'प्राप्तबाध' यह तीसरा दोष हुआ। उक्त तीनों दोषों में से प्रथम दो दोष श्रवणसम्बद्ध होने से शब्दगत माने जाते हैं एवं तीसरा दोष रागतः प्राप्त की निवृत्ति होने के कारण अर्थनिष्ठ माना जाता है, साक्षात् रूप से श्रवणसम्बद्ध न होने के कारण शब्द-निष्ठ नहीं माना जाता।

मीमांसार्थसंग्रहकौमुदी—**दोषत्रयं प्रदर्शयति**—दोषत्रयं चेति। **तत्र श्रुतहानौ हेतुमाह**—श्रुतस्येति। **अश्रुतकल्पनायां हेतुमाह**—अश्रुतेति। **प्राप्तस्य बाधेऽपि हेतुमाह**—प्राप्तस्येति। **रागतः प्राप्तस्येत्यर्थः। अस्य दोषत्रयस्य व्यवस्थया वृत्तित्वमाह**—अस्मिंश्चेति। **दोषत्रयमध्य इत्यर्थः।**

**अर्थबोधिनी**—लाक्षणिकी परिसङ्ख्या में इतरव्यावर्तक शब्द का प्रयोग नहीं होता है; इसीलिये इसमें तीन दोष ये हैं—१. श्रुतार्थपरित्याग, २. अश्रुतार्थकल्पना एवं ३. प्राप्तबाधा।

जैसा कि पूर्व बताया जा चुका है, **पञ्च पञ्चनखा भक्ष्याः** वाक्य का अर्थ 'अपञ्च-पञ्चनखभक्षणनिवृत्ति' समझा जाता है; किन्तु वाक्य में 'पञ्चपञ्चनखभक्षण' साक्षात् श्रुत है और वाक्यार्थ होता है—'अपञ्चपञ्चनखभक्षणनिवृत्ति'। इस प्रकार यहाँ श्रुत अर्थ—पञ्च-पञ्चनखभक्षण का परित्याग किये जाने के कारण श्रुतार्थपरित्याग नामक दोष माना जाता

है। वाक्य में अपञ्चपञ्चनखभक्षणनिवृत्ति शब्दशः उपात्त ( श्रुत ) नहीं है, फिर वाक्यार्थ में इसकी कल्पना किये जाने के कारण यहाँ 'श्रुतार्थकल्पना' नामक दोष माना जाता है। 'पञ्चनखभक्षण' एवं 'अपञ्चनखभक्षण' पुरुष को रागतः प्राप्त होता है, किन्तु प्राप्तभक्षणैकदेशनिवृत्ति-इतरभक्षणनिवृत्ति होने के कारण यहाँ 'प्राप्तबाध' नामक दोष माना जाता है। अभिप्राय यह है कि सभी जीवों का भक्षण रागप्राप्त है, फिर कुछ के अतिरिक्त ( प्राप्तैकदेश ) सभी पञ्चापञ्चनख जीवों के भक्षण की निवृत्ति 'प्राप्तबाध' दोष है।

उक्त तीनों दोषों में से 'श्रुतार्थपरित्याग' एवं 'अश्रुतार्थकल्पना' इन दोनों दोषों का सम्बन्ध शब्दात्मक वाक्य से है, अतएव ये दोनों दोष शब्दनिष्ठ हैं। 'प्राप्तबाध' दोष का सम्बन्ध रागतः प्राप्त होने के कारण वाक्य से सम्बन्धित नहीं है; अपितु इसका सम्बन्ध अर्थ से है। अतएव इसे 'अर्थनिष्ठ' कहते हैं।

इस प्रकार संक्षिप्त विवेचन द्वारा ग्रन्थकार ने पाठकों को प्रकृत विषय के ज्ञान के सम्बन्ध में मार्गदर्शन किया है ( इति दिक् ), जिसके आधार पर पाठक स्वप्रयास द्वारा ग्रन्थार्थ को विस्तार से समझ सकते हैं।

**प्रसङ्ग**—६१वें विभाग में ग्रन्थकार मन्त्र के स्वरूप की व्याख्या कर रहे थे। उस विभाग से लेकर यहाँ तक आनुषङ्गिक विषय—विधित्रय का विवेचन हुआ। अब ग्रन्थकार पुनः अपने मूलविषय—मन्त्रमीमांसा की ओर लौट आये—

### ६६. मन्त्रविशेषाणामुच्चारणस्यादृष्टार्थकत्वम्

**येषां तु प्रयोगसमवेतार्थस्मारकत्वं न सम्भवति तदुच्चारणस्यानन्यगत्या अदृष्टार्थकत्वं कल्प्यत इति नानर्थक्यमिति।**

**अर्थ**—जो मन्त्र अनुष्ठान में उपयुज्यमान पदार्थों के स्मारक नहीं हो सकते हैं, अगत्या यह मान लिया जाता है कि उन मन्त्रों का उच्चारण अदृष्ट को उत्पन्न करने के लिये होता है। इसलिये मन्त्रोच्चारण व्यर्थ नहीं होता है।

**ननु कथं सर्वेषां मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेनैवार्थवत्त्वमुपपद्यते हुंफडादिमन्त्राणां प्रयोगसमवेतार्थस्मारकत्वासम्भवादित्याशङ्क्याह—येषामित्यादिना। तदुच्चारणस्येति इति। हूंफडादिमन्त्रोच्चारणस्येत्यर्थः। अनन्यगत्यादृष्टार्थत्वमिति पदच्छेदः। इति नानर्थक्यमिति। अतो हेतोर्हुंफडादिमन्त्राणां नानर्थक्यमित्यर्थः।**

**अर्थबोधिनी**—विभाग १६ में बताया जा चुका है कि अनुष्ठान में समवेत अर्थों का स्मरण कराना मन्त्रों का प्रयोजन होता है। प्राप्त मन्त्राक्षरों द्वारा वही अर्थ अभिहित होता है, जिसका सम्बन्ध अनुष्ठान से होता है।[1]

१. एतद् वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति। ( ऐतरेयब्राह्मण-१.५ )

किन्तु कुछ मन्त्र ऐसे भी होते हैं, जो प्रयोगसमवेत अर्थ का स्मरण करा सकने में समर्थ नहीं होते; जैसे 'कवचाय हुम्', 'अस्त्राय फट्' आदि मन्त्र। फिर क्या इन मन्त्रों के उच्चारण का कुछ भी प्रयोजन नहीं है[१] अतएव क्या ये मन्त्र प्रयोजनहीन—व्यर्थ हैं? उत्तर है—नहीं। जिन मन्त्रों का अर्थस्मरणरूप दृष्ट प्रयोजन नहीं प्राप्त होता है, उन 'कवचाय हुम्' आदि मन्त्रों के उच्चारण से अदृष्ट उत्पन्न होता है, यह मानना चाहिए। क्योंकि ऐसे मन्त्रों को अदृष्टार्थक मानने के अतिरिक्त और कोई उपाय नहीं है। इस प्रकार किसी भी मन्त्र का उच्चारण किसी भी स्थिति में व्यर्थ नहीं होता है।

**मन्त्रप्रकरण समाप्त**



१. हुम्फटादिमन्त्रोच्चारणस्येत्यर्थः। (कौमुदी)

# ( घ ) नामधेयप्रकरणम्

प्रसङ्ग—वेद के पाँच प्रभेदों[1] में से विधि एवं मन्त्र का विवेचन हो चुका। अब क्रमप्राप्त नामधेय का विवेचन किया जा रहा है—

## ६७. नामधेयलक्षणम्

**नामधेयानां च विधेयार्थपरिच्छेदकतयार्थवत्त्वम्। तथाहि—'उद्भिदा यजेत पशुकामः' इत्यत्रोद्भिच्छब्दो यागनामधेयं, तेन च विधेयार्थपरिच्छेदः क्रियते। तथा हि—अनेन वाक्येनाप्राप्तत्वात् फलोद्देश्येन यागो विधीयते। यागसामान्यस्याविधेयत्वात् यागविशेष एव विधीयते। तत्र 'कोऽसौ यागविशेषः' इत्यपेक्षायामुद्भिच्छब्दादुद्भिद्रूपो याग इति ज्ञायते। 'उद्भिदा यागेन पशुं भावयेत्' इत्यत्र सामानाधिकरण्येन नामधेयान्वयात्।**

अर्थ—नामधेयों की यही सार्थकता है कि वे विधेय क्रिया के व्यावर्तक होते हैं अर्थात् नामधेयों से विधेय क्रियामात्र का बोध होता है। उदाहरण के लिये उद्भिदा यजेत पशुकामः एक विधिवाक्य है। यहाँ 'उद्भिदा' शब्द याग का नामधेय है। इसके द्वारा विधेय क्रिया व्यावृत्त होती है। इस कथन को इस प्रकार समझें—उद्भिदा यजेत पशुकामः इस वाक्य द्वारा पशुफलक ऐसे याग का विधान किया जाता है, जिसका विधान किसी प्रमाण से नहीं हो पाया है। ऐसा निश्चय होने पर किस याग का विधान है यह समझना सरल है कि यागसामान्य अर्थात् जिस किसी याग का विधान नहीं हो सकता, किसी विशेष याग का ही विधान होना चाहिये। फिर 'वह कौन-सा विशेष याग है?' ऐसी आकाङ्क्षा होने पर वह याग 'उद्भिद् संज्ञक है' इस प्रकार 'उद्भिद्' याग का नाम ठहरता है। उद्भिदा यजेत पशुकामः का मीमांसासम्मत अर्थबोधवाक्य इस प्रकार होगा—उद्भिदा यागेन पशुं भावयेत्। यहाँ हम देखते हैं कि उद्भिदा और यागेन पदों में सामानाधिकरण्य है, अतएव दोनों एक हैं। यह तभी सम्भव हो सकता है, जब 'उद्भिद्' याग का नाम हो।

मीमांसार्थसंग्रहकौमुदी—**मन्त्रभागस्य यथायथं प्रयोजनवत्त्वमुपपाद्येदानीं क्रमप्राप्तं नामधेयानां सार्थक्यमुपपादयति**—नामधेयानामिति। विधेयार्थपरिच्छेदकतयेति। **विजातीयव्यावर्तकत्वेन विधेयार्थनिश्चायकतयेत्यर्थः। विधेयार्थस्यैव समर्थकतयेति यावत्। एतदेव प्रदर्शयति**—तथा हीत्यादिना। तेन चेति। **उद्भिच्छब्देन चेत्यर्थः। उद्भिच्छब्दस्य विधेयार्थपरिच्छेदकतया नामधेयत्वप्रदर्शनाय भूमिकामारचयति**—तथा हीत्यादिना। अनेनेति। 'उद्भिदा

---

१ देखिये—विभागसङ्ख्या-१२

यजेत पशुकामः' इत्यनेनेत्यर्थः। फलोद्देशेनेति। पशुरूपफलोद्देशेनेत्यर्थः। यागेति। साधन-वैलक्षण्यमन्तरेण फलवैलक्षण्यानुपपत्तेर्नात्र यागसामन्यं विधीयते। ततश्च यागविशेष एव विधीयत इत्यर्थः। तत्रेति। यागविशेषस्य विधेयत्व इत्यर्थः। क इति। कोऽसौ यागविशेष इति यागविशेषापेक्षायामित्यर्थः। उद्भिच्छब्दादुद्भिद्रूपो याग इति ज्ञायत इति। उद्भिच्छ-ब्दात्पुनरुद्भिन्नामको यो यागः स एवात्र यागविशेष इति विज्ञायत इत्यर्थः। एवं च सिद्धमुद्भिच्छब्दस्य धात्वर्थसामानाधिकरण्येनान्वयं फलितमाह—उद्भिदेति। ननूद्भिच्छब्दस्य नीलमुत्पलमित्यत्र नीलपदस्योत्पलपदसामानाधिकरण्यवद्यजिसामानाधिकरण्यं भवे-त्किंनामधेयत्वेनेति चेन्न, वैषम्यात्। तथा हि—तत्र हि नीलपदस्यार्थो नीलगुण उत्पल-पदार्थादुत्पलरूपद्रव्यादतिरिक्तो भवति, लक्षणया तु नीलपदस्य तादृशद्रव्यपरत्वेनोत्पल-पदसामानाधिकरण्यमुपपद्यते। उद्भिच्छब्दस्य तु यज्यवगतयागविशेषान्नातिरिक्तो-ऽर्थोऽस्ति, तस्यैव तत्र विशेषत्वसमर्पकत्वात्। ततश्चार्थान्तरवाचकत्वाभावेन नोद्भिच्छब्दस्य नीलशब्दस्योत्पलशब्दसामानाधिकरण्यवद्यजिसामानाधिकरण्यमुपपद्यते, किं तर्हि 'वैश्वदेव्यामिक्षे'त्यत्रामिक्षापदस्य वैश्वदेवीशब्दसामानाधिकरण्यवत्, वैश्वदेवीशब्दस्य हि देवतातद्धितत्वात् तस्य च 'सास्य देवते'ति सर्वनामार्थे स्मरंणात् सर्वनाम्नां चोप-स्थितविशेषवाचित्वेन विशेषपरत्वम्। तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायाम् आमिक्षापदसान्निध्यादामिक्षारूपो विशेष इत्यवगम्यते। यथाहुः—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यादस्यैव विषयार्पणम्।। इति।

तस्माद्यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यमेवं सामान्यस्याविधेयत्वाद्यज्यवगतयागविशेषसमर्पकत्वेनैवोद्भिच्छब्दस्य यजिसामानाधिकरण्यमित्युक्तप्रकारेणैव नामधेयानामन्वयः साधुरिति। तथा चोक्तं 'तद-धीनत्वाद्यागविशेषसिद्धे'रिति।

**अर्थबोधिनी**—'नामधेय' का संक्षिप्त रूप 'नाम' ( संज्ञा ) है। मीमांसादर्शन में 'नामधेय' एक पारिभाषिक शब्द है। 'नामधेय' शब्द का अर्थ किसी 'याग का नाम' समझा जाता है, अन्य अर्थ नहीं। उदाहरण के लिए **उद्भिदा यजेत पशुकामः** इस विधि में प्रयुक्त 'उद्भिद्' शब्द का अर्थ 'उद्भिद्' नामक एक यागविशेष समझा जाता है। यद्यपि 'उद्भिद्' शब्द के 'खनित्र[1] ( कुदाली )' आदि भी अर्थ गृहीत होते हैं, किन्तु वह अर्थ यहाँ अभिप्रेत नहीं है। इस प्रकार उद्भिद् शब्द यागनामधेय या नामधेय है।

नामधेय का प्रयोजन होता है—विधेय अर्थ का परिच्छेद करना। विधेय अर्थ कोई क्रिया होती है। उस क्रिया का सजातीय एवं विजातीय अर्थों से भिन्न रूप में समझना

१. उद्भिद्यते ऊर्ध्वं विदीर्यते भूमिरनेनेति व्युत्पत्त्या भूमेरूर्ध्वविदारणसाधनं खनित्रादिः पूर्वपक्षेऽर्थो वेदितव्यः। ( सारविवेचिनी )

